॥ आत्मपूजोपनिषत् ॥

ॐ तस्य निश्चिन्तनं ध्यानम् ।
सर्वकर्मनिराकरणमावाहनम् ।
निश्चलज्ञानमासनम् ।
समुन्मनीभावः पाद्यम् ।
सदामनस्कमर्घ्यम् ।
सदादीप्तिराचमनीयम् ।
वराकृतप्राप्तिः स्नानम् ।
सर्वात्मकत्वं दृश्यविलयो गन्धः ।
दृगविशिष्टात्मानः अक्षताः ।
चिदादीप्तिः पुष्पम् ।
चिदाग्निस्वरूपं धूपः ।
सूर्यात्मकत्वं दीपः । var चिदादित्यस्वरूपं दीपः
परिपूर्णचन्द्रामृतरसैकीकरणं नैवेद्यम् ।
निश्चलत्वं प्रदक्षिणम् ।
सोऽहंभावो नमस्कारः ।
परमेश्वरस्तुतिर्मौनम् ।
सदासन्तोषो विसर्जनम् ।
एवं परिपूर्णराजयोगिनः सर्वात्मकपूजोपचारः स्यात् ।
सर्वात्मकत्वं आत्माधारो भवति ।
सर्वनिरामयपरिपूर्णोऽहमस्मीति
मुमुक्षूणां मोक्षैकसिद्धिर्भवति ॥ इत्युपनिषत् ॥

॥ इति आत्मपूजोपनिषत् समाप्ता॥